**दृश्यश्रव्यत्वभेदेन काव्यं द्विधा विभज्यते ।**

# 1. दृश्यकाव्यम्

- दृश्यं तत्र अभिनेयम् ।
- दृश्यकाव्यस्य 'रूपकसञ्ज्ञा' इति ।
- तद्रूपारोपात्तु रूपकम्' इति ।

# दृश्यकाव्यस्वरूपम्

- मृदु-ललित-पदाढ्यं गूढशब्दार्थहीनं जनपदसुखबोध्यं
- युक्तिमन्नृत्ययोग्यम् ।
- बहुकृतरसमार्गं सन्धि-सन्धानयुक्तं भवति जगति योग्यं नाटकं
- प्रेक्षकाणाम् ॥

# दृश्यकाव्यभेदाः

- रूपकम् ।
- उपरूपकञ्चेति ।

# रूपकभेदाः

- रूपकस्य दश भेदाः सन्ति ।
- 1.नाटकम् 2.प्रकरणम् 3.भाणः 4.व्यायोगः
- 5.समवकारः 6.डिमः 7. ईहामृगः 8.अङ्कः
- 9.वीथी 10.प्रहसनम् इति ।

# उपरूपकभेदाः

- उपरूपकाणि अष्टादश । तानि च –

- 1. नाटिका 2. त्रोटकम् 3.गोष्ठी 4. सट्टकम्
- 5. नाट्यरासकम्  6.प्रस्थानः 7.उल्लाप्यम्  8.काव्यम्
- 9. प्रेङ्खणम् 10. रासकम् 11. सलापकम् 12. श्रीगदितम्
- 13. शिल्पकम् 14. विलासिका 15. दुर्मल्लिका  16. प्रकरणी
- 17. हल्लीशः  18. भाणिका चेति ।

# 2. श्रव्यकाव्यम्

- सामान्यतः रचनासाहित्यं सर्वं श्रव्यकाव्येषु अन्तर्भवति ।
- तद् त्रिधा विभज्यते - (i)पद्यम्  (ii)गद्यम् (iii)चम्पूः चेति ।

# (1) पद्यकाव्यम्

- **छन्दोबद्धपदं पद्यम् इति ।**
- स्वरूपरीत्या विषयरीत्या पद्यकाव्यं विभज्यते ।

स्वरूपरीत्या तस्य भेदाः यथा –

**छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम् ।**
**द्वाभ्यां तु युग्मकं सान्दानतिकं त्रिभिरिष्यते ।।**
**कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ।।**

विषयरीत्या तस्य भेदाः यथा –

(i) महाकाव्यम्
(ii) आर्षमहाकाव्यम्
(iii) प्राकृतकाव्यम्
(iv) अपभ्रंशकाव्यम्
(v) भाषाविभाषा-नियमात्काव्यम्
(vi) खण्डकाव्यम् चेति ।

# 2. गद्यकाव्यम्

‘अपादः पदसन्तानो गद्यम् ’।

(अपादः नाम चरणानिबद्धः । तस्य पदसमूहः एव गद्यम् ।)

**स्वरूपरीत्या विषयरीत्या गद्यकाव्यं विभज्यते ।**

- स्वरूपरीत्या तस्य भेदाः यथा –

**वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।**
**भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ॥**

विषयरीत्या तस्य भेदाः यथा –

**गद्यम् आख्यायिका कथा इति तस्य प्रभेदौ द्वौ ।**

# 3.चम्पूकाव्यम्

**‘गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।’**

उदा० – नलचम्पूः, मदालसा चम्पूः, भारतचम्पूः इत्यादयः ।

